त्वमव्याप्यवृत्ति स्यात् । स्यादेवेति चेत्तर्हि प्रतीतिकालस्य तदवच्छेदकत्वे वैशिष्ट्यमेव तत्तद्व्यक्तित्वमवच्छेदकम् । तथा च स्वस्य स्वावच्छेदकत्वे आत्माश्रय इत्याहुः **आत्मे**ति । न च तत्तद्व्यक्तित्वेनावच्छेदकत्वे नायं दोष इति वाच्यम् । तद्व्यक्तित्वेन सम्बन्धावगाहिवैशिष्ट्यप्रतीतेः सम्बन्धत्वाकल्पकत्वेन तथोक्तेरयुक्तत्वात् । एवं भगवत्तर्कचक्रमध्यगतो वादी चक्रात्स्वमुद्धर्तुं भगवन्मायां प्रति मायां रचयति **नें चे**त्यादि । **तदर्थ** इति **वाच्य**मिति पर्यन्तम् । यत्रानेकतर्कशस्त्राण्येकत्र प्रादुर्भवन्ति तदिदं मायाभ्रम, तत्रान्तरा बाणरन्ध्रेषु **न चे**ति चतुष्टय प्रतिबाणान्प्रेषयन्ति । **तथात्वं** विशिष्टप्रत्ययजननयोग्यत्वम् । **तदर्थ** सम्बन्धान्तरपदार्थ । तथा च 'सम्बन्धान्तर'मित्यादे सामासिकार्थं विहायाऽनवस्थितपारिभाषिकार्थानुसरणमेव मायेत्याशय· । सम्बन्धपदं सन्निकर्षपरमित्याह **षोढे**ति । षट् प्रकारा प्रसिद्धा· । इदं स्वरूपसम्बन्धत्वनियामकमित्यभिमान·, संसर्गस्याज्ञातस्य विशिष्टबुद्धिविषयत्वाभ्युपगमेन संसर्गज्ञान विनापि प्रतीतिसिद्धेरिति भावः । **नें च वाच्य**मिति । सर्वदा स्वरूपसम्बन्धकल्पनापत्तेर्योग्यतायाश्चानिरूपणादित्यर्थ । ननु तथात्वे सति सम्बन्धत्वमेव योग्यत्वम्, केवलस्वरूपसत्त्वेऽपि सम्बन्धत्वं नास्तीत्यत्रात्माश्रये सत्यपि तद्व्यक्तित्वेन कल्पकत्वे वा दूषणान्तरमाहु **योगजे**ति । तद्धर्मस्य तत्तत्संसर्गावगाहिप्रत्यक्षनियामकत्वे संसर्गत्वकल्पकत्वावश्यंभावादिति भाव· । अथेष्टापत्तिर्लौकिकयोग्यत्वं वा विवक्षितमित्याशङ्कते **नें चे**ति । वाच्यमित्यनेनान्वय । योगजधर्मस्य संसर्गत्वेनासिद्धे·, सिद्धौ वा तस्याज्ञातस्यैव विशिष्टबुद्धिविषयत्वाभ्युपगमेन युञ्जानाराधितयोगस्य चिन्ताविशेषः सहकारी न स्यात्, तस्मान्नेष्टापत्तिरित्यर्थ । **लौकि**केति । पूर्वं 'सन्निकर्षाभावे'त्यन्तेनालौकिकतज्जननयोग्यत्वमुक्तम् । एतच्चालौकिकस्थलीयस्वरूपसम्बन्धे नियामकम् । लौकिके त्वाहु· **लौकिके**त्यादि लौकिकालौकिकोभयविधतद्योग्यत्वं वा नियामकमित्यर्थः । तत्तत्सन्निकर्षसमवधाने लौकिकालौकिकयोरुभयोरपि स्वरूपसम्बन्धत्वसिद्धिर्न तु योगजधर्मस्य तत्सिद्धि·, तस्य सन्निकर्षत्वेन स्वरूपान्तरस्य सम्बन्धत्वकल्पकत्वेऽपि स्वस्य तदकल्पकत्वोपपत्तेरिति भावः । **सामान्यप्रत्यासत्ता**विति । तस्या· स्ववैशिष्ट्यांशे विषयविधया लौकिकतज्जननयोग्यत्वात्तत्सम्बन्धे चातिव्याप्तेरिष्टापत्तेश्चोकरीत्या कर्तुमशक्यत्वादिति भाव· । **न च जन्ये**ति । **जन्ये**त्यनेन नित्यसामान्यस्य घटत्वादेर्व्युदास । जन्याजन्यसामान्यव्यावर्तनाय तदुभयसामान्यात्वं वा विवक्षितमित्याह **विनापी**ति । अपिना सामान्यभेदनिवेशो दर्शित । **नें चे**ति । सामान्यलक्षणास्थले किञ्चिद्धर्मिणि लौकिकप्रत्यक्षसामग्र्या· सहकारित्वम् । अत एवान्धतमसे सौदामिनीतेजोजनितद्रव्यचाक्षुषेऽपि तदुत्तरं न चाक्षुषमित्युक्तं नैयायिकै । तथा च सामान्यलक्षणाया नातिव्याप्तिरिति भाव । एवमव्याख्याने जन्यसामान्यस्यावरणादिति ध्येयम् । **अतिव्याप्ते**रिति । योगजधर्मेण प्रत्यक्षे जननीये लौकिकसामग्र्या सहकारित्वाभावेनोक्तातिव्याप्तिदार्ढ्यमेवेति भाव· । लौकिकतज्जननयोग्यत्वनिवेशे 'जन्यलौकिकप्रत्यासत्ति विनापी'त्यंशं त्यजेति पुनरुपालम्भो द्रष्टव्य । तटस्थ शङ्कते ननु 'सम्बन्धान्तरमन्तरेणे'त्यंशत्याजनवत्'सन्निकर्षाभावे सती'त्यन्तांशोऽपि त्यज्यताम्, अन्यथा तु संयोगादिस्थलेऽपि स्वरूपसम्बन्धसम्भवात्सम्बन्धान्तरमित्यादिकमप्यर्थान्तरवारणायोपादीयताम् । किञ्चैवं षोढासन्निकर्षस्थले स्वरूपसम्बन्धो न सिद्ध्येत्, इतरस्य सम्बन्धत्वकल्पकस्याभावात् । न च 'विशिष्टे'त्यादि, योग्यत्वान्तं विशेष्यमात्रमेव तत्कल्पकम् । तथापि 'सम्बन्धान्तर'मित्यादे· सत्यन्तस्य च तदर्थत्वेन स्वीकृतस्य वैयर्थ्यप्रसङ्गात् । न चार्थान्तरवारणाय तदुपादेयम् । संयोगादेरुक्तत्वेनानन्तस्वरूपाणां सम्बन्धत्वकल्पनस्यैवार्थान्तरनिवारकत्वात् । मैवम्, तावदनवबोधात् । सम्बन्धत्वनिवेशप्रसञ्जितात्माश्रयवारकत्वेन सत्यन्तार्थकरणात् । न च तथापि सत्यन्ते सति विशिष्टप्रत्ययोऽसिद्ध इति वाच्यम् । अनुमित्यादावलौकिकप्रत्यक्षे च स्वरूपसम्बन्धसिद्धेः । तत्र तत्र तत्तत्सामग्र्याः तत्तत्सम्बन्धविषयक· । ( 'न च सामान्ययोगजधर्मे त्यत· 'प्रतिबिम्बत्वेन वाऽलीकस्य नियमन भवत्वस्मिन् स्थितिर्वा' एतत्पर्यन्तमूलग्रन्थस्य व्याख्या नास्ति )

पूर्वेत्याद्युक्तं स्पष्टयन्ति **ज्ञानैकघनस्ये**[१४७]ति । घनात्मकधनुषो नाणुत्वभेदौ पूर्वापरकोटी सम्भवतः, सूर्य इव स्वप्रकाश्ये तस्मिन्नणुत्वभेदयोर्विरोधात् । आभासत्वेनाणुत्वम्, प्रतिबिम्बत्वेन भेदश्चोक्त· । नत्वमयोरनिर्वे-

चनीयत्वम् जीवस्य मिथ्यात्वस्वीकारे त्वस्य चिदंशमादाय तत्प्रतीतावङ्गीकरणीयायामसन्नेव जीवो भासतामि-
त्यलीकत्वेनाभ्युपगते तस्मिन् पूर्वप्रकारेणोत्तरस्य व्यपदेशभेदस्याऽन्वयो वक्तव्यः, स च न सभवति, अली-
कत्वव्यपदेशान्वययोग्यत्वयोर्विरोधादिति भावः । अत एवालीकस्यानिर्वचनीयस्य वा न चेतनत्व साधारणो
धर्मः, ज्ञानैकघने विद्यमानस्य सार्वश्यचेतनत्वस्य तादृशे जीवेऽसम्भवादित्याहु **तत** [147] **एवे**ति । कथं तर्ह्यंशत्वो-
क्त्युपपत्तिस्तत्राहुः **प्रकारस्त्व**[147]ति । तुशब्देन प्रकारान्तरनिरास । कण्ठरवेण तु श्रुतौ नांशत्वमुक्तं, किन्तु
भगवता व्यासेन चोक्तम्, तन्निर्वचनचिन्ताया च श्रुतिरेवान्वेष्टव्येति व्युच्चरणमाविर्भावविशेष एवांशत्वमिति
तथोक्तमित्यर्थ । ननु लोके नाविर्भावमादायांशत्वव्यवहार., यथा पटस्य तन्तवो दशा एव वाश , घटादेर-
प्यवयवविशेषा एव तथेति प्रकृते तदसम्भवमाशङ्कमानं प्रत्याहु **इदमत्र ज्ञेय**[148]मिति । श्रुतिरूपास्वरूपापन्ना-
नामिदं वाक्यम् । **न** [148] **लोके**ति । धर्मिणोऽलौकिकत्वे धर्माणामप्यलौकिकत्वादित्यर्थ । जीवस्याहंप्रत्यय-
गम्यत्वेऽपि तदीयांशत्वस्य ब्रह्मनिरूप्यत्वान्नहि स्वयमेव स्वांश इति भाव । ननु वेदे कुत्रांशत्वमिति श्रुतिर्भवद्भि-
रेव प्रार्थनीया, प्रार्थितापि न ब्रूयाच्चेत्तर्ह्यंशत्वमेव त्यज्यतामित्यत आहु **एवं सती**[148]ति । भगवानेवांशत्व वदन्न-
स्माभि पृष्टप्राय., श्रुतिस्तु बृहदारण्यके भवता मिलिता भविष्यति, तयाऽत्मना निर्गमनं ब्रह्माविर्भावविशेष-
निबन्धन भवतामुपदिष्टमपि न प्रतीतम् । तर्कस्तत्र लौकिकोऽग्नि· खाण्डव इव खण्डखाद्यमाकाङ्क्षेत, स यदि
तर्कोऽलौकिकभावेन खण्डखाद्येनानुगृहीत , तर्हि बृहदारण्यकार्थमंशत्वं न भक्षयेत् । ननु सौषुप्तादात्मनो
जाग्रद्दशाया ‘क्वैष तदाऽभूत्कुत इति’ प्रश्नोत्तरत्वेन व्युच्चरणमुपक्रान्तम्, तत्कथमंशत्वमिति चेत्, तर्हि सौषुप्ता-
त्मानमाकलय । यथा प्रसुप्तो जाग्रद्दशायामाविर्भवतीव, तथा स्वे महिम्नि स्थितस्य जीवभाव आविर्भाव एवेति ।
यद्ययमानन्दभुक्कोशविशेषावच्छिन्न·, सोऽपि कुत इति प्रश्ने किमुत्तरम् तस्मादानन्दमयाख्यं भगवद्रूप
यन्ममैवेत्याह सोऽयमानन्दादानन्दमयो, न मायानिर्मितकोश । मयडर्थ प्राचुर्याख्यविषयता, विषयता
च स्वरूपसम्बन्धविशेष । ममैवेत्याह ब्राह्मणम् तस्माद्वीतेति निपुणतमम्, तस्मात् स तर्कोऽस्माभि प्रसादेन
सभावितो, न युष्माभिरित्याहु **अत** [149] **एवे**ति । तर्केणाविप्रतिपन्नेनालौकिकभावपुष्टेन च । तेनाविप्रतिपन्नेन
श्रौतोऽर्थ· पोषणीय एवेत्याहु **इत्यादिका** [149] **श्रुति**रिति । श्रुत्युक्तस्तर्क· श्रौत , तेन सिद्धा या मति , सा नाप-
नेया । किञ्च श्रुत्यापि बाधकत्वेन तर्कोऽनुगृहीतो मननामननात् स्वाभिमतातिरिक्तार्थं बाधितु न तु स्वार्थं
बाधितुमित्यभिप्रायेणाहु· **अन्यथे**[149]त्यादि । यदि लोकानुसारिणमर्थं श्रुतिरनुबध्नीयाद्गौरिव भगवदतिरिक्तमनु-
सरन्ती वेणुवेत्राभ्यां निगृह्येत । किञ्च यद्यलौकिकोऽर्थो न स्यात्तर्ह्येषा मतिरिति न निर्दिष्ट स्यात् । लौकिकस्य
लौकिकेन बाधने श्रुतेर्न किञ्चिद्बाधनम् तस्मादस्त्यलौकिकोऽर्थ , स एव लोकसिद्धार्थकुवलयापीडेनालौकिक
मल्लरङ्गलीलायामुपयुक्तो भवति । तेनापि सह मल्लयुद्धमेव भगवता दन्तिना सह तर्कमुद्दयैव कृतमभ्यासेना-
भिमलीलायै । अन्यथेयं लीला व्यर्था, मल्लयुद्धार्थमाहूतस्य भगवतस्तस्य चान्योद्देश्यकलीलाप्रवृत्तेर्नीतिविरुद्ध-
त्वाच्चेत्याहुः **विरुद्धार्थो** [150] **च स्या**दिति । अलौकिकार्थं दृष्टान्तयन्ति **लोके**[148]**ऽपी**ति । लोके भूत्वाऽलौकि-
कोऽयमर्थः, अयःकान्तसन्निधौ लोहस्य चाणूरादेर्वा । अत्र कश्चिद्युक्तिं प्रयुञ्जीत बाधिकाम्, तर्हि ‘नहि
दृष्टेऽनुपपन्नं नामे’ति न्यायाल्लौकिकसन्निकर्षजन्यं ज्ञानं नानुमानप्रतिबध्यम् । तच्चेदमसत्, विरुद्धधर्माध्यासात् ।
परिभ्रमणं हि चेतनधर्मः, क्रिया वा, उभयथापि घटसन्निधौ पटपरिभ्रमणप्रसङ्ग , कथं च पाषाणो विजातीयोऽयः-
कान्तीभवेदिति युक्तिः, सा च प्रत्यक्षेण बाध्यते, क्वचित्सत्प्रतिपक्षमुद्रयाऽनुमानेनाप्यानुमानिकी, क्वचिच्च प्रत्यक्षमपि
चन्द्रपरिमाणादौ भ्रान्तं यत्र मानान्तरविसंवादः । शब्दानुमानयोर्यद्यपि समप्राधान्यम्, उभयोरुपपन्नत्वे अयः-
कान्तादावपि शक्तिसाधकानुमानसम्भवात्, अन्ततोऽयःकान्तत्वादेरेव शक्तित्वात्, शक्तेरतीन्द्रियत्वनियमे माना-
भावात् । धर्मविशेषत्वेन कारणतावच्छेदकधर्माणां व्यवहारस्य प्राप्तत्वेऽपि ‘पराऽस्ये’ त्यनेनानेकधर्माश्रयत्वलक्षणं
वैचित्र्यमेव तत्र तत्रेति शक्तिपरिभाषायाः स्वस्वसङ्केतमात्रत्वात् । एवं प्रमाणशब्दप्रतिपन्नोऽप्यर्थ इत्युभयरणस्त-
म्भरूपाभ्यां शब्दानुमानाभ्यां यदि मिथ· प्रतिपक्षसम्बन्धीभवितव्यम्, स्वसेनाकलहप्रसङ्गः, तदर्थं प्रत्यक्षाद्यपेक्षया
भिन्ने विषये तुल्यबलयोः शब्दानुमानयोरहम्पूर्विकायां परस्परमुपकार्योपकारकभावेन प्रवृत्तिः । नहि साम-
ग्रीत्वात्प्रथमप्रवृत्तत्वेन सेनाधिपेन स्वोत्तरप्रवृत्तानुमानमुद्दिश्य सिद्धान्तं शक्यं वारयितुम् । शाब्दे आनुमि-

त्वादौ पुनरनियतमिष्टसाधनताज्ञानम्। सैषा सर्वसिद्धा प्रक्रिया वेदान्तिभिरुपारोप्यते निकुञ्जवीथीति यत्र भगवदनुमाने मुरलिकारवोऽसाधारण. शब्दो गवा हुङ्कृतयश्च शब्दानुमानोभयमूर्तयो वरीवर्तन्ते, निर्वृतिविशिष्टसत्ताया एव शब्दे प्रतिपादनात्। अयमेव ह्यौपनिषदशब्देषु विज्ञानिशब्देषु चोत्कर्ष, यत. स्वत साक्षात्कारमिवानुमित्यादिकमपि भावयता सर्वप्रमाणरूपत्वमिति, किन्तु सप्रकारक एव साक्षात्कार इत्यत्र सभ्रमो वाक्परिवृढानाम्, निजोक्तनाम्न सकाशाद्भगवत्साक्षात्कारादित्यल पल्लवेन। इदमुपलक्षणम्। चन्द्रकान्तसन्निधौ चन्द्रसुधासरोऽवगाहनादिकमनुमन्वेयम्। **देवतास्वभावस्येवेति**। यथा तुलापरीक्षाया परीक्षाकृष्टचेतनदेवताभिर्नमनोन्नमनाभ्या जयाजयौ, तथेहापीत्यर्थ। मणौ परदेवता प्रविष्टेति तयाऽधिभूताध्यात्मिकयोर्भगवदीयत्वसम्पादनात्कचिदभिभावकत्वाच्च देवतापक्षेऽपि देवतास्वभावस्य गुणीभूतत्वमित्याहु **मणिस्वभावस्य**। परदेवतात्वेन प्रविष्टस्य भगवत सार्वज्ञ्यविषयतावच्छिन्न वस्त्वेव, प्रपञ्चविषयतयैव तावद्विषयतास्वरूपत्वस्य ब्रह्मस्वरूपे उन्नयनात्, अन्यथा सौषुप्तविषयतया निर्विशेषविषयतया वा तदुन्नयने सृष्टिनिरूपणज्ञाप्यत्वस्य विरोध। तस्मात्तत्प्रामाण्यार्थं केवलविषयत्वेनावधृतस्यैव सार्वज्ञ्यविषयत्वाभ्युपगम साधीयान्, सर्वज्ञतातिरोभावे स्वतोऽपि तिरोधानापत्तेरित्याहु **मन्तव्यमिति**। ननु युक्तिभिरनुचिन्तनं मननम्, युक्त्यनङ्गीकारे कथमत्राहु **न युक्तिरिति**। यत्र सर्वथा बाधकप्रमाणावतारो नास्ति, तत्साधकं प्रमाणमस्मन्मते युक्तियोग। सर्वस्य ब्रह्मसम्बन्धित्वमेकविज्ञानादिति युक्ति। यत्र तु बाधक, सा युक्तिर्लौकिक्यमित्रणार्थिका, न ततो भगवत्प्राप्ति। सार्वज्ञ्यविषयता च सर्वसिद्धा, तत्कृताऽभेदधी. सृष्टिं प्रत्युपजीव्यत्वात्र सद्भेदक्षमेति भाव। साशत्वमंशिताप्रपर्यायमवयवैरंशैस्तिरोकृत्याविर्भावलक्षणमंशत्वं व्यवस्थापयतीत्यर्थः। **मन्त्राणां** प्रयोगसमवेतार्थस्मारकत्वम्। मन्त्रवर्णाना सिद्धवद्वस्तुबोधकत्वेन ततोऽपि प्रामाण्यम्, मन्त्रो गूढपदार्थो वर्ण्यते यत्र। अस्य महतो भूतस्य सिद्धवस्तुन पादोऽपि सिद्ध एव। नहि सिद्धस्यासिद्ध. पादो भवति। चराचरात्मैवेति रहस्यम्। हे जीव आय नर, गा जीवयतीति जीवस्तल्लोके वाऽऽनन्दसमुद्रे जीव सन्नेव भूतो नित्योऽनादित्वात्सनातन, सनातनो वा कुमार.। **मं मैवेति**। नाविद्याचैतन्ययो· समुच्चय इत्यर्थः। एवं चांशस्य सत पाष्ठिको बन्ध एवास्येत्यनेनास्यांशस्योक्त अन्यथाऽन्योन्याश्रयादस्येत्यस्य दुर्वचत्वापत्तेरिति भाव.। इदमेवोक्तं 'न तु तत्कृतं जीवत्व'मिति मुक्ताफलावल्याम्। **नाग्निरिति**। यद्यपीन्धनांशेनाविद्यांशेन वा नाग्निर्भेद्य वा तथा, अपि तु हार्दावच्छिन्नविषतावच्छिन्नं स्वरूपमेवाश उच्यते, तत्र हार्दं नाविद्यकम्, 'तन्मनोऽसृजते'ति साक्षात्सृष्टिश्रवणात्। ऐन्द्रियकविषयतानियामकविषयताश्रयद्रव्यविशेषो हि मनस्तादृशविषयताया सम्बन्धत्वकल्पकत्वेनाङ्गीकृत। तदवच्छिन्नविषयतान्तरत्वमंशत्वं जीवत्वमिति। प्राणप्रशास्तृत्वमपि धारणाख्यविषयतानियामकत्वमेव, ज्ञप्तौ संयोगादिप्रक्रियायामनङ्गीकारादिति। अल्पज्ञत्वं सर्वज्ञविषयताव्याप्य, न तु भ्रमसमानाधिकरणमित्याहु. **भ्रमस्त्विवति**। **जीवभावः** पूर्णत्वतिरोधानम्। न चैवं 'पूर्णात्पूर्णमुदुच्यत' इत्यनेन विरोध इति वाच्यम्। सर्वज्ञदृष्ट्या वेदेन तयोक्तेरिति केचित्। वस्तुतस्तु सर्वज्ञविषयतायामल्पज्ञत्वं प्रविष्टमित्येव पूर्णत्वपदार्थ। न चैवमज्ञत्वमनुपपन्नम्, ज्ञानसामान्याभावस्यासिद्धे। यत्किञ्चिज्ज्ञानवत्वे त्वल्पज्ञत्वमेवेति तत्सार्वज्ञ्यविषयतयैव कोडीकृतमिति। केचित्तु भ्रमस्तु जीवानामनुभूयमानो न ब्रह्मांशत्व उपपद्यते, अतोऽविद्यावच्छिन्नत्वमप्युपादेयम्। तथा च निजाचार्यसिद्धान्तविरोध इति महतां वाक्यं मनसिकृत्य **तर्हीत्यारभ्यैव** रघुनाथवर्याणां पूर्वपक्षावतारश्चेदिति पर्यन्तमित्याहुः। वस्तुतस्तु भ्रमोऽप्यापातत इति ख्यातिविचारे विस्तीर्णविषयत्वात्तत्रसार्वज्ञ्यानुपपत्तिरेतावन्मात्र पूर्वपक्षशरीरम्। **न हीति** तन्निवारणम्, वारद्वयमस्यान्वय इति, 'तस्मा' दित्यत प्राक् सिद्धान्तग्रन्थ एव। 'तस्मा' दित्यारभ्य पुनः पूर्वपक्ष.,। **तस्मादिति**। जीवभावोऽपि यथामिथ्यानादिना सपद्यते; तत्रनादित्वानुपपत्त्यादिदूषणग्रस्तत्वादित्यर्थः। **ईश्वरप्रसादजज्ञानत** इति प्रसिद्धमाध्वमताभिप्रायेण। प्रसादश्च भगवदुक्तो 'मत्प्रसादात्तवार्जुने'ति भेदाभेदबुद्धिक्षमः पदार्थान्तरं प्रसन्नोऽस्मीत्यनुभवसिद्धम्। शुद्धस्य हि मित्र प्रति प्रसादः। स्वात्मसात्करणं सख्यादिषु निवेशनम्। **मुक्तो भवति** स्वत·, तत्वमेदेन प्रविशति। तद्गुणसारत्वाभिप्रायेणांश इति माध्वाभिमानः। कथं तर्हि जीवसृष्टिरिति पाञ्चरात्राशङ्कायामाह **श्रुतिश्चेति**। यथा चात्राविर्भाव एवांशत्वेनोपव्याख्यातस्तथेति। स च

सौषुप्तात्मा तु स्वाभावाकाराभिव्यक्तव्यापिवैकुण्ठप्रतिष्ठोऽपि लीलाकारानन्दमय एव। 'सता सौम्ये'ति श्रुते, तथापि व्यासे स्वस्य प्रत्यक्षे सम माध्याह्निकप्राणायामावसरे तरणिमुपतिष्ठता पितृचरणाना वाक्यप्रतीक्षयाऽयं पूर्वपक्षावतार इति बोध्यम्। भगवदुदर गिरिगर्तं। उदरं सापादिकाकाशो वा। अवकाशावच्छिन्नात्मस्वरूपमेव तद्दहराख्यमिति सर्वज्ञत्व नाल्पज्ञत्वविरोधीत्याह **ननु परिच्छिन्ने**त्यादि। आदिना तत्त्वज्ञानपरिग्रह'। **पार्थ** इति। धनुर्द्धरत्वं धनु'कार्यानुकूलशिक्षाविशेष, तदाह **यथा स** इति। यद्यपि पार्थ एव गदापाणिरिति न प्रयुज्यते, तच्छिक्षायास्तद्विपक्ष एव साम्राज्यात्तथापि तद्गदाया गृहीततत्साम्राज्यरूपत्वेन जयशालित्वात्पञ्चविंशतिसहस्रगजसञ्चारित्वाच्च भीमोऽपि पार्थस्तथा प्रयुज्यत इति प्राणाधिष्ठातृबलेन स्वयं समादधते **वेदार्थतामरसे**ति। प्राणायामो ब्रह्मण्यवगाहनम्, तेन मार्कण्डेयानुभूतमायास्वाधीनीकरणे तया प्रदर्शिते ब्रह्मस्रोतसि दुरवगाहे वीक्षणमात्रं वेदार्थो भगवदीक्षणरूप. श्रीपरिवृढे प्रतिष्ठितस्तामरसस्तेनैव समाधौ नित्यजीवी व्यास पीनो देवदत्त इतिवदन्तर्दृष्ट्यैव चक्षुष्मान्, तादृशचक्षुषा सूर्य इवेत्यर्थ। सूर्य किल यै किरणै पिबति रस तानेव किरणानाप्यमण्डलीयत्वेन चन्द्रकिरणानिव तामरसे नियोजयति, ततो विकास इति चन्द्रात्मकत्वमप्युक्तम्। अत एव रासलीला वक्ष्यतीति भाव। **निदर्शनं** स्मृति। 'स्मृतेश्चे'ति सूत्रात्। श्रौताश्च दृष्टान्ता विस्फुलिङ्गादयस्तदाहु' **आदिभिरि**ति। त्वेवुक्त भिन्नत्वम्। यस्य भवद्भि पक्षे स्थितं, स माध्व एवं मनुते अंशांशिनोर्भेद इति, तादृशयोराखण्डलार्जुनयोर्भेदादिति, भेदसहिष्णुरंशांशिभाव इति। अत्रैव भेदसहिष्णुरभेदस्तादात्म्यमित्येकदेशिमत प्रागेव भेदाशनिबर्हणेन परिष्कृतम्। तथा च सिद्धान्ते तादात्म्यसहिष्णुरंशांशिभाव इत्याशय'। न चाखण्डलार्जुनयोर्व्यभिचार, तयोरवान्तरांशांशिभावेन नरनारायणयोरेव मुख्यांशांशिभावस्वीकारात्। तेजोविशेषप्रकृतिकार्जुनदेहस्येन्द्रसम्बन्ध्यतिशयिततेजोऽंशसङ्क्रमायदि तदवच्छिन्नस्यार्जुनस्य तदंशत्वम्, तर्हि शुद्धचिदंशस्य तस्य निजधर्मिचित्तादात्म्यातिशयरूपशक्तिविशेषात्मकविषयताविशेषसम्बन्धान्नारायणांशत्वं चेति वैकुण्ठस्वर्गदूताभ्या विवादे, देहप्राप्तिरास्तामिन्द्रक्रोडे, आत्मना त्वयं भगवत्प्रपन्न' प्रपत्स्यते चेति कस्यायमंशो मुख्य इति विचारणीयम्। 'आत्मा वै पुत्र'इत्यादौ चात्माभेदोप्येव रीत्योभयथा समर्थनीय। नामान्यप्यात्मन्येव सर्वस्वरूपेऽन्वीयुरेव, 'अनामे' त्यादेरेकनामनियन्त्रितसङ्केताभावार्थत्वात्। किञ्च 'नामयन्ति स्वार्थमाख्यातार्थे तानि नामानी'ति जैमिनेरनुशासनान्नामार्थस्य भगवतो गुणीभावरूपनमना संभवादाख्यातार्थस्यैव गुणत्वं, भगवत' प्राधान्यमिति प्रथमान्तमुख्यविशेष्यत्वमनामत्वपदार्थो वैयासिकानाम्। गोत्र निजशाखायोजनं प्रत्येकविश्रान्तम्, भगवतस्तत्सर्वा शाखा., सर्वशाखाप्रत्ययन्यायात्, का कां कुत्र कुत्र योजयेत्, तदर्थमेवर्षयो विभक्ता। अनियमात्स्ततो भगवति गोत्राभाव इत्यादि बोध्यम्। नन्वलमनयाऽप्रस्तुतप्रशंसया, नरनारायणयोरपि भेदः समाख्याभेदादपीति प्रत्युपस्थितोऽय माध्व केन विद्वद्वारणेन वारणीय'। न खलु निखिलनिगमगीतामुपदिशन्नपि भगवानस्त्वमहमिति कुत्राप्युपदिष्टवान्, विभूतिसाधारणाभेदस्तु जीवातिरिक्ते प्रपञ्चेऽपि, न च तयोरेकविधोऽभेद इति विज्ञापिते प्रतिवादिना विमोचितयुक्तिप्रत्यक्षाभिरेव तत्त्ववादिवारणचरणशृङ्खलामुपाददते **वाक्यभेदप्रसङ्गादि**ति। वाक्यसमुदायात्मकप्रकरणभेदप्रसङ्गादित्यर्थ.। तेन चायं मीमांसार्थः-यत्र वाक्यान्यर्थतोऽपि भिन्नानि पूर्णान्येव, परस्पराकाङ्क्षाभावाद् 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत' इति न्यायसिद्धमेकवाक्यत्वमेषां हीति पत्रावलम्बनसूत्रं स्मृत्वा स्वयं संपाद्यते, तदाहुः **विनिगमके**ति। केषाञ्चिदुद्गम, केषाञ्चिदुत्पत्तिरित्यर्द्धजरतीयं नादरणीयं, किन्तूद्गम उत्पत्तिर्वा कः पदार्थ इत्यन्वेषणे स्वरूपसम्बन्ध एव ज्ञानक्रियाशक्तिशब्दादिमदाविर्भावो विषयताविशेषात्मको जीवप्रपञ्चसाधारण इत्यध्यवसीयते। व्युच्चरन्ति विशेषेणोर्द्ध्वं प्रत्यग्भेदेनागृहीतस्वतादात्म्या पदार्था भवन्तीदमेवांशत्वम्। वास्तवतन्मात्रत्वमानन्त्यसमानाधिकरणं तत्तत्परिमाणावच्छिन्नमपि हि गगनमवच्छेदकावच्छिन्नत्वयो स्वरूपसम्बन्धरूपयोर्व्यञ्जकमेवोपधेयम्। उपधानं च तस्य यच्छुद्धसत्त्वात्मकविषयताविशेषाश्रयान्त करणप्रावरणेनोपवीतम्। बहिरावरणं हि तादृशमायाकृतम्। पुरञ्जनस्य नैषा वैशारदी मतिर्माययाऽपनेयेति परमार्थमुपदिश्य पादुकासन्निधौ चिन्तामणिप्रभृतीन् दर्शयन्ति **चिन्तामणिकल्पतरुकामधेन्वादिभ्य** इति। अत्रापि हि चिन्तामणिरिव कल्पवत्कामधेनुवच्च भवति, विचारिताविचारितदातृत्वात्, उपसत्तिमात्रापेक्षित्वात्, परन्तु

चिन्तामणिप्रभृतय' कार्याननुगमान्निमित्तमात्रं, न तूपादानम् । ब्रह्म तु प्रादुर्भाव्य पदार्थं तत्तच्छक्तिमत्तया तत्र तत्र प्रविशतीति निजाविर्भावलक्षणं तादात्म्यं नातिशेते, इदमेवांशत्वम् । अस्तिभातिप्रियत्वादिभानसाक्षिकमिति सूत्रेऽप्युपपत्तिं प्रदर्शयन्त एवाहु' [१५५]**तथापी**ति । पूर्वोक्तामसर्वज्ञतानुपपत्तिं सिंहावलोकनेन परिहरन्ति [१५५]**नैवमि**ति । निजस्वरूपाविर्भावे तदनुपपत्तेरित्यर्थः । [१५५]**ईक्षया** विषयताविशेषात्मकवीक्षया । तथा जगत्क्रीडनेच्छा, तथा जीवेष्वपि तत्र व्यापकीभूय रमणेच्छा । व्यापकेषु संयोगाद्यसम्भवात्सत्तादात्म्येनापि व्यापकतायां तेषु तज्ज्ञानवत्सु रमणाकाङ्क्षाविरहात्तत्तादात्म्यं तिरोधायाशिकं च तावदवच्छिन्नत्वं स्थिरीकृत्य तत्र रमणमुक्तं भवति । आनन्दांश आनन्दमयत्वम्, तद्यदि वैकारिकं तर्हि न निषिध्येत, जीवस्वरूपस्य तन्मते आनन्दविकारत्वादिति शङ्करकोशिनं व्यासहृदयं चन्दनेन चर्चयन्त इवाहु' [१५५]**अत एवे**ति । तदीयं सूत्रमन्यतमः शङ्कते [१५६]**नन्वि**ति । अत्र श्रीमदाचार्यान् प्रमाणयन्ति [१५६]**आचार्या** इति । ये स्वयमङ्गीकृत्य श्रीकृष्णात्मसात्कुर्वन्ति ब्रह्मसम्बन्धकरणेन ते आचार्या इति विशेषलक्षणं वेदितव्यम् । विषयतामात्रं सदंशः, विषयित्वं चिदंश , प्रेयस्त्वेनानुभवविषयत्वमानन्दांश इत्याहु' [१५६]**स्वरूपभूतमि**ति । स्वरूपान्नातिरिच्यत इति विवेक इत्याहु [१५६]**सर्वमनवद्यमि**ति । **अवद्यं** जडांश', सोऽपि यत्सम्बन्धादनवद्यो भवतीति निजहृदयं विद्वन्मण्डनैर्निरूपितम्, अन्यथा स्वरूपभूतमिति न वदेयु , स्वरूपस्यैक्याद्भेदाभेदपक्षानङ्गीकाराच्चेति । [१५६]**एतयो**र्धर्मधर्मिणो. । विशिष्टेच्छायामपि किं नियामकमिति महाराजेन पृष्टे प्राहु [१५६]**अग्र** इति । अस्मद्विचारपुर सरो भवतु य एव विलक्षणवादी भवानित्यर्थः । स एव शङ्कते [१५७]**ननु ब्रह्मरूपाणामि**ति । अङ्गीकृत्य वदन्ति [१५७]**जीवकृतावेवे**ति । प्रकृतहानाप्रकृतप्रक्रिये पुरुषदोष , उद्भावनमात्रत्वात् । न च तादात्म्यं हीयते, न च नित्यो दोषागम', मोक्षशास्त्रप्रामाण्याच्च । ननु बन्धमोक्षावपि सति तादात्म्ये किमित्यविद्याकुक्षिनिक्षिप्ताविति पुन. पृष्टे विशिष्टेच्छानियामकता वदन्त एव महाराजपदवीसादृश्यमाहुः [१५७]**राज्ञां स्वतन्त्राणामि**ति । यथेदानीं भगवदाज्ञया श्रीगोकुले गोष्ठस्थाने रिङ्गणरमणाङ्गणादिकमिति भाव । ऐश्वर्यादेर्बलिवामनादिनिष्ठस्य यथाश्रुतदृष्टान्तानुरोधेनाहुः [१५७]**किं पुनरि**ति । लोकनियमना परस्परासम्भेद । [१५७]**कारणकारणस्य** स्वसत्तया स्थापकस्य, 'द्यावापृथिवी विधृते तिष्ठत' इति श्रुते. । तेन येषां सम्भेद पतनं वा प्रसिद्धम्, तत्र तत्सकोचे मानाभावात्स्वसत्ताव्याप्यसत्ताकत्वं सर्वत्र निराबाधमित्युक्तं भवति । दास्यभक्तिमान् दास इति ब्रह्मदासा इति श्रुत्यर्थ' । तेन केचिदसुरा अपि उक्ता. । श्रुतौ साधारण्येनोक्तिः स्वरूपयोग्यतार्था । कितवोऽऽजामिल' । दाश इति पाठे व्याससम्बन्धी उच्चनीचभाव' समदर्शनसत्तामात्रेणेति निगर्व । ब्रह्मत्वेनैव ज्ञानित्वं भक्तत्वं चेति धर्मिणि विरोधाभावात्सिद्धमेवोक्तम् । [१५७]**अन्यथाकरणम**न्यथाप्रदर्शनम् । सामर्थ्यप्रभेदोऽयम् । कर्तुमकर्तुमन्यथाकरणात् तत्तद्विषयतात्मकाविर्भाववैचित्र्येण भावमात्रत्वाभावविशिष्टसामर्थ्यस्याभावविरोधोभयरूपतया भगवद्बाहिर्मुख्यं शङ्कनीयमित्यर्थ. । पुरुषदोषरूपदोषोद्भावकं बहिर्मुखं प्रत्याहुः [१५८]**किञ्चैवमि**ति । [१५८]**प्रसज्ययेयाता**मिति । 'विषवृक्षोऽपि सम्वर्ध्य स्वय छेत्तुमसाम्प्रत' मिति न्यायादित्यर्थः । ये त्वत्र सत्त्वरजस्तमउपाधिभि शरीरभेदैर्वोक्तदोषं समादधते तान् प्रत्याहु. [१५८]**तथा सती**ति । अयं भाव.—सर्गादिजनिका कृतिरेकैव, सिसृक्षादेरुपाधिभेदाद्, भेदेऽपि कृतिभेदस्य प्रामाणिकैरलिखनाद्, इच्छाया अपि 'सोऽकामयते'त्येकधैव श्रवणाच्च विशिष्टस्यानतिरेकाच्च । तथा च सर्गाद्यनुकूलकृतिमत. संहारानुकूलकृतिमत्त्वमुक्तदोषापादकम् । तदिदमुक्तम्—[१५८]**नित्यत्वप्रसङ्गः, असम्भवो वा स्या**दिति । जीवानां तु स्वतोंऽशत्वेनापि च शुद्धत्वात्तौ दोषावापाततः स्याताम्, शुद्धयर्थत्वात् तथा करणस्य । यच्चोक्तं 'सति तादात्म्य' इत्यादि, तदपि 'स्थितस्य गतिश्चिन्तनीये'ति न्यायान्न पर्यनुयोगार्हम्, बन्धमोक्षयोरपि तादात्म्येनाधिष्ठितत्वात् । प्रादुर्भावस्तु कार्यकल्प्यविशिष्टेच्छानुरोधित्वाद्व्यवस्थितः । यत्तु अवच्छेदकभेदात्तत्तत्कृतिमत्त्वमिति, तन्मन्दम्, निरवच्छिन्नकृतेरवच्छेदकसद्भावे मानाभावात् । अन्यथा ब्रह्मादीनामीश्वरत्वानुपपत्तेः, निरवच्छिन्नकृतेरेवेश्वरीयाया नैयायिकसिद्धान्तसिद्धत्वात् । तथा च नियतावच्छेदकानुसरणे साकारवादादस्मन्मतप्रवेशस्तदननुसरणे कृतेर्वैविध्यासम्भवादेकस्यां कृतौ सर्गसंहाराद्यनुकूलत्वविरोधात्तौ दोषाविति दोषापवादेऽशरीरवादिनां शरीरस्वीकारापत्तिरिति चौराकृतिरेखाभिर्मयूरचित्रमिदम् । अथ मुक्तन्यायादित्यमुक्तेऽपि जगद्व्यापारवर्जत्वाद-

शरीरतां मनुषे, सेयं परेषां रीतिर्न नैयायिकानाम् । निर्दुःखत्वादिनैव नित्यमुक्ततोपपत्तेः, आकाशादेरपि येन रूपेण स्फूर्तिः शब्दावकाशादिना तद्वज्ज्ञानतादात्म्यज्ञानवत्त्वाभ्यां यावदाश्रयभाविभ्यां ब्रह्मणस्तत स एव व्यञ्जकत्वादाकारः । निराकारवादिनस्तु विषयतामपि न मन्यन्ते । न चोल्लेख ब्रह्मणः । तेषां स्वप्रकाश्यत्वे गतिश्चिन्तनीया । ये तु विषयतां मन्यन्ते सविशेषवादिसेनान्यः, तेषां भगवज्ज्ञानविषयतावैशिष्ट्यं प्रथमप्रपन्नेषु प्रपञ्चावयवेषु स्वानन्दमाविर्भाव्य प्रतिष्ठितं नित्यप्रपन्नेषु वा । पौनःपुन्यं च प्रपञ्चस्य प्रपत्तिसाधनविषयताद्वारा सकलप्रपञ्चमेव स्वाकारीकृत्योद्धर्तुं तदेतन्मयूरचित्रं व्याख्यातम् । **महदैश्वर्यमि**ति[१५८] । रजआद्युपाधिसत्ताया अपि स्वत ईश्वरसत्ताव्याप्यत्वमिति दर्शयन्ति **मत्त एवे**ति[१५८] । विषयताविशेषाणां तेषामव्यक्तद्रव्याणामङ्गीकारेऽपि भावात्मकानामन्तरङ्गाणां न भेद इत्याहुः **न त्वहं तेषु**[१५८] । भेदेन । **मयी**ति[१५८] । अनाविर्भावदशायाम् । **एभ्यः पर**मिति[१५८] च । अनाविर्भावे । ब्रह्मणो मायाया दुरत्ययत्वमिच्छाया वादिसम्मतकारणप्रवेशमभ्युपगमवादेनाहु **अविद्यादी**ति[१५८] । **महदैश्वर्य**मिति । व्याख्यातमेतत् । किञ्चापरं वादिप्रदत्तमप्युपधानमविद्यादिकमङ्गीकरोति, स्वासृष्टेषूक्तभावेष्वध्यासेन सन्नपि नासदिति हि तेषां दर्शनम्, तत्र 'मत्त एवे'त्यध्याससाधारणः सर्वसङ्ग्रहो नोपपद्यतेतमामिति । अस्मद्दर्शने च निषेधो नोपपद्यते, तदुभयसमाधानं भगवता कर्तव्यम्, तथैव प्रभुवाक्यतात्पर्यात् । तथा च येनाध्यास आश्रीयते सोऽप्यविद्याप्रवर्तकत्वात् मत्त एवेति स्वासाधारणधर्मोऽनुग्रहविषयताख्य सर्ववादिनामेवावलम्बनम् । उत्कृष्टश्चायम्, अवश्याभ्युपेयत्वात्, तदाहुः **मां पार्थ दैवीं प्रकृति**मिति[१५८] । स्वात्मकाविर्भाववादेन सर्वसमाधानं भगवत्सिद्धान्त इत्याहुः **भगवतोक्त**मिति[१५८] । **मत्त** इति[१५०] पञ्चम्या मुख्यावधित्वं दर्शितम् । भावपदोक्त्या । सार्वविभक्तिकस्तसि । **अपोहनं**[१५०] विस्मृतिरप्रतिभा वा । स्वात्मकमत्तिरोभावात्स्वस्य भानप्रयोजकसम्बन्धत्वाकल्पनादिति भावः । कार्यकल्प्या हि विषयतेति हृदयम् । स्मृतित्वमपि स्मरामीति प्रतीतिसिद्धो विषयताविशेषः । तदवच्छिन्नस्मृतावनुभवानन्तरीणव्यवहिताव्यवहितानियतसमयोद्बोधकान्तरादिशालिनी मूलविषयतैव संस्कारस्थानाभिषिक्तेत्युक्तं भवति । अपिना भगवद्वाक्यान्तराण्यप्युक्तानि । राजलीलास्थितो भगवानिह माध्यस्थ्ये प्रार्थितः प्रकटीभूय **दैवी**मित्यादिना देवानां समूहोऽप्यत्र विचारे साक्षीति दर्शयति । तेन सर्वत्र कारणतावच्छेदकानां भगवद्विषयताविशेषावेश उक्तो भवति । युक्त्या युक्तिः प्रतिबध्या, सत्प्रतिपक्षन्यायात् । 'ब्रह्मात्मस्य तु ब्रह्मात्र'मिति श्रुतेर्नान्य प्रतिपक्षः । ननु बलाबलविवेको युक्त्योः श्रुत्योश्च तुल्य एवेति चेत्, सत्यम्, तथापि श्रुतेर्बलं श्रुतिः । श्रौतोऽर्थश्च स्वत एवैकवाक्यतयैवोपपन्न एवेति युक्तिरेतदन्तर्गतैवेति तत्र तत्र वक्ष्यामः । एवं च श्रुतिः कर्मणा कारणत्वं वदन्ती श्रुत्यन्तरेण तेषामिच्छानिष्ठकारणतावच्छेदकत्वेनान्यथासिद्धिं वदता न विरुध्यत इत्याहुः **यमेवोचामेति**[१५८] । वाचापतेरयमनुशय इत्यर्थः । श्रौतस्य भावस्य तदेकगम्यत्वादिति भावः । श्रुतेर्हि विरोधे निर्णायकमेकवाक्यत्वम्, कर्मणा चानुभवविशिष्टानां कारणत्वम्, अननुभूयमानस्य कारणत्वे मानाभावात् । यद्यपि कर्ममात्रस्य नानुभवः कारणतावच्छेदकः, किन्तु फलातिशयः कारणतावच्छेदकः । 'ज्ञात्वाऽज्ञात्वे'ति भगवदुक्ते । तथापि मयेदं कृतं फलं जनयिष्यतीत्यभिसन्धिविशिष्टस्य जनकत्वे तादृशानुसन्धानस्यावच्छेदकत्वे लाघवात्तत्तद्विशिष्टानुसन्धानस्यानुभवत्वात्तस्य चाखण्डस्यैक्याद्विनिगमकाभावात्कर्मणां च सखण्डत्वात्कर्मोपलक्षितानुभवतादात्म्यस्यैव कारणतावच्छेदकत्वम् । एतेन कर्मणां कारणतावच्छेदकत्वे तदानन्त्याद्विपरीतं गौरवमित्यपास्तम् । कर्मण्यपि तिष्ठन् कर्मान्तर इति । एवंरीत्यैकवाक्यता स्वाचार्यैः कृतेत्याशयेनोक्त**मवोचामेति** । **अहेति**[१५८] श्रुतिसम्वादोऽपि दर्शित । **अत एवेति**[१५८] । अत एवान्तरो नियामकः, अत एव जीवनिष्ठमिष्टत्वमपि भगवत एवेत्याहुः **सङ्गच्छते**[१५८] इति । इयं श्रुतिः पूर्वश्रुत्या गमयतीत्यसङ्गता भवतीति भावः । अत्र विषमदर्शित्वं निरुक्तस्वरूपात्मकतिरोभावशक्त्यैव तत्तज्जीवानां प्रपत्त्यभावप्रयुक्तमिति स्वरूपशक्तेः सर्वत्र पर्याप्तत्वादिति श्रुतयोऽप्यत्र विचारे कर्णा, कर्णिकयन्तीति श्रुत्वा व्यासस्त्वाशु प्रविशतीत्याहुः **अत एवेति** । सिद्धान्तं भाष्योक्तम् । ननु जीवे न दोषाय, ब्रह्मणि तु दोषायैव, विषमदृष्ट्यापादकत्वादिति चेद्, न; 'नैव तस्य कृतेनार्थो नाकृतेने'ति भगवता विज्ञानिपुरुषे स्वधर्माणामुपक्षेपात् । यथा मम न कृताकृते, कृतं सार्वश्यादि तत्प्रयुक्तं च विहितादि, तत्तिरोधायाऽकृत-

मसार्वेश्यादि तत्प्रयुक्तं च किञ्चिद्यदि जीवे मयाऽपाद्यते, तर्हि मदंशे मय्येवेदमापादितमिति नायमपराधोऽस्य । किञ्च यदि नैवं कुर्यां, कर्मोच्छेदापत्तिः । अतोऽधिकारविशेषार्थं मयेयं प्रादुर्भावाख्यसर्गप्रक्रिया कर्मनिबन्धना रचिता । सापि किमर्थमिति चेद्वेद उपालभ्यताम्, वेदश्चेन्मदुपालम्भं कुर्यात्, किमर्थं स्वरूपाद्दूरमिव यागादिभिरायामित इति तदा मयि सुप्ते किमर्थमयं श्रुतिवीणामुपढौकयति स्म, प्रबुद्धः किलाहं किं करवाणि, तदर्थमधिकारविशेषेषु वेदानां नियोगं कृतवान्, सर्वात्मभावं च प्रदर्शितवान् । एवं च मदीयस्वापेक्षया मोक्षलीला निर्विशेषैकस्वभावा । सा राजसादीनां—त्वमिदमिति चेद्, गुणनिरोधादिति गृहाण । सात्त्विकानां भेदाभेदप्रधाना साम्यावस्था हि सत्त्वाभिवैव प्रकृतिरिति तदनिवृत्तौ भेदाभेदव्यवस्थितेः मदधिष्ठितानां शुद्धतादात्म्यलक्षणसत्त्वपर्यायनैर्गुण्यप्रधानेति भगवतो राद्धान्तः समर्थितः । 'परात्तु तच्छ्रुते'रित्यधिकरणेन यथाश्रुतकर्मवादानुरोधी कश्चित् तत्त्ववित्तमः प्रत्यवतिष्ठते, तद्वाचं स्वयमुदीरयन्ति [१६०] **ये त्विति** । ईश्वरस्य साक्षात्प्रवर्तकत्वे विधिनिषेधौ व्यर्थावित्याह [१६०] **अन्यथेति** । ननु शब्दस्यैव स्वातन्त्र्येण प्रवर्तकत्वमीश्वरसचिवस्येति कर्मवादावैयर्थ्यमित्याशङ्क्याह [१६०] **कस्यंचिदित्यादि** । [१६०] **तादृक्कर्मैवेति** । तथा च शब्दस्यापि कर्मैव सचिवः, शब्दमात्रादलसादेः प्रवृत्त्यभावदर्शनात्, प्राक्तनादृष्टस्यैव तत्र तन्त्रत्वात् । तत एव तस्यानादिसत्तां प्रतिपादयति [१६०] **प्रवाहस्येति** । तत्तत्प्रागभावातिरिक्तप्रागभावाप्रतियोगिकर्मधाराया इत्यर्थः । न चाप्रसिद्धिः, परस्परं प्रागभावानां भेदप्रसिद्धेः, परस्परं च प्रतियोगित्वप्रसिद्धेः । प्रागभावानङ्गीकारे तु तत एवानादित्वम् । तथाप्यनादित्वनिर्वचनं कीदृशमिति चेत्, आकाशादीनां नित्यत्वमेव, तदन्येषां तु तत्तद्वर्तमानसमयसम्बन्धित्वमेवेत्यवेहि । समादधते [१६०] **तेषामिति** । कर्मसापेक्षत्वे कर्मण एव कृतिमत्त्वमित्यस्तु, अतिरिक्तशाब्दभावनान्यायात्, 'कामः सङ्कल्प' इत्यादिना मनस इव । एतेन सिसृक्षादयो मायावृत्तय इति मायिकमतमपास्तम् । कृत्याश्रयत्वेन मायाया एव सिद्धौ नवलक्षणलक्षितकर्तृत्वाश्रयस्यातिरिक्तस्यासिद्धौ तल्लक्षणप्रयासवैयर्थ्यात् । अध्यासपक्षेऽपि मायाया एव विनिगमकाभावेन परमेश्वरत्वापत्तेः, सेश्वरवेदान्तसिद्धान्तभङ्गप्रसङ्गात् । चैतन्यस्यैव प्राधान्यं वदन्ती श्रुतिस्तु चेतनासाधारणधर्मस्वरूपविषयतात्मकमेव कारणतावच्छेदकीकुर्यात् । तस्माच्चेतने ज्ञानं चैतन्यं विषयता ज्ञप्तिस्वरूपसम्बन्ध एवेति न तथा द्वैतापत्तिरिति । एवमवान्तरप्रसङ्गे **तेषामिति** सर्वनाम्ना परेऽपि महाप्रकरणानिर्दिष्टाजडजडयोरैकज्ञप्तितादात्म्यमप्रतिपन्ना अजडांशेन द्वैतपरिहाराय तमेव मृषा भाषन्तः परिधानीयत्यागेनापि च निजवपुः संरक्षन्तो विमृश्याः । तथैवेतरेऽपि वादिनः, जाड्यापरिहारात् । एवं च ज्ञप्तिर्विषयता चेत्यभेदक्षमं पुटद्वयम्, तत्र च प्रेयस्तादात्म्यं मणिर्निवेशितः स्वाचार्यैः । ज्ञप्तिस्तदाधारो विषयता च, विषयाश्चान्ये इति त्रिचतुःपुटीपक्षो नोपादेय इति हृदयम् । ननु 'धाता यथापूर्व'मिति सर्गकर्तृत्वश्रुतेस्तस्य च प्रलयपूर्वकत्वात्तदुभयकर्तृत्वे तस्य प्राण्यदृष्टसहकारकत्वेनैव कर्मणा सिद्धत्वादुपजीव्यविरोधात्कर्मणान्यथासिद्धेरसम्भवादीश्वरसिद्धिरिति वदन्तं तदक्षं त प्रत्येव निक्षिपन्त प्राहुः [१६१] **आपद्यते** इति । तेन प्रवाहानादित्वं तदुक्तं तस्य स्मारितम् । यदहोरात्रं तदहोरात्राव्यवहितपूर्वकमिति ते स्वीकारात्सर्गप्रलयावार्थवादिकौ, न वास्तवौ, अवान्तरसृष्टेश्च कुविन्दादेरपि सम्भवादितीश्वरसाधनानुपपत्तिरेवेत्यर्थः । प्रबलमन्त्रिवेन भवदीयकर्मणैवेश्वरो निगृहीत इवेति भावः । स्यादेतत्, मीमांसकस्य नेदं दूषणम्, तस्य निरीश्वरत्वात् । मम तु मीमांसाप्रतिपन्नकर्मफलसमर्पकत्वात् सेवितराजवदीश्वरसिद्धिरिति सेश्वरमीमांसकमते प्रविशन्तं महाराजं प्रत्यनीकं कुर्वन्ति [१६१] **न चेति । अन्यथेति** । सहकारित्वान्यथानुपपत्त्येत्यर्थः । तथा च कर्मणैव सचिवतरेण परसम्मत इवेश्वरो निगृहीत इति नापबलमनुसन्धेयमिति भावः । न च जडस्य कर्मणो न तथाभावः, जडस्याप्यौषधविशेषादेः, पार्श्वमणेश्च स्वर्णजनकत्वदर्शनात् । महान्तस्त्वाभिमानिकीं देवतां मन्यन्ते । प्रभवस्त्वाभिमानिकव्यपदेशं भगवत एवेति विवेचयन्ति । अथ व्यासः स्वसूत्रव्याख्यावैचित्र्यमणुभाष्यस्य विद्वन्मण्डनोक्तिप्राधान्येनैकवाक्यत्वं च श्रोतुं राजाभिधं पुनः प्रत्यवस्थापयन्ति [१६१] **ननु कृतप्रयत्नेति** । ईश्वरवादकर्मवादयोरुभयोः साधकं सूत्रमिदम् । तदुक्तं [१६१] **तत्त्वेति** । तयोर्वादयोर्भाव एकवाक्यत्वम्, तस्य सूत्रं सर्वतोमुखम् । तथा च ब्रह्मग्रन्थिस्थानीयं कृत्वा ब्रह्मसूत्रमिति व्याख्येयम् । क्वचित्तथैव पाठः । [१६१] **तथोच्यते** इति । कर्मण एव तथात्वकल्पने यथाश्रुतसूत्रवैयर्थ्यम् । **'परादिव'ति** सूत्रवैयर्थ्यं

सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः' इति । **एतयोः** स्मरणास्मरणयोः । **धर्मत्वहानिश्चेति** । 'वेदप्रणिहितो धर्म' इत्युक्तेर्वेदस्य प्राप्तमपि प्रामाण्यं कदाचिदपलापादनुष्ठापकत्वलक्षणेनाप्रामाण्येनाभिभूतमिति प्रमाणाप्रतिपन्नत्वात्तदानीं धर्मत्वहानिरित्यर्थः । वास्तवार्थस्तु ब्रह्मत्वाद्धर्मस्य केवलधर्मत्वहानिरिति । ब्रह्मत्वं तु सकलसामर्थ्यस्य तदेकनिष्ठत्वात्, कर्म ब्रह्मतादात्म्यापन्नम्, तदसाधारणफलजनकतावच्छेदकशक्तिसङ्क्रान्तत्वात्, तत्त्वज्ञानवदित्यादिरीत्या मन्तव्यम् । परैरपि वृत्त्यवच्छिन्नचैतन्यस्यैव तत्त्वज्ञानत्वाङ्गीकारात् । उपास्तिरप्येतेन व्याख्यातेति । व्यपदेशभेदस्तु सिद्धत्वसक्रमाभ्याम्, सक्रमश्चाभिव्यक्तिविशेष इति । **फलोद्देशेति**[१६२] । नित्यन्यायेन सर्वस्य फलोद्देशाभावे भगवदर्थत्वात्तस्य चेदानीमपि सुप्रसन्नत्वादभिव्यक्तेश्चानतिप्रसक्तायाः फलोपपत्तेरपूर्वकल्पने मानाभाव इति निगूढार्थः । **अग्रिमेति**[१६२] । कर्मपदेनादृष्टमेव वक्तव्यम् । फलस्य भ्रमप्रतिपन्नत्वे तन्निर्वाहकादृष्टकल्पनाया प्रमाणाभावादग्रिमकर्मप्रवर्तकमदृष्टमेव नास्तीति कर्मप्रवाहे नियामकालाभ इति वावदूकं प्रावाहिकं प्रति सेश्वरवादेन ये समादधते, तत्समाधानमाहुः **समाधानार्थेति**[१६२] । निषेधकोटिपरिग्रहः पूर्वपक्षः, विधिकोटिसमर्थनं समाधानम्, प्रवाहप्रवर्तकं विधिः कर्म, अन्यतरं न वेति विप्रतिपत्तिः । विधिप्रसिद्धिर्यागादिकरणे । निषेधप्रसिद्धिर्भोजनादिनिखिललौकिकव्यापारे । विधेस्तत्राभावात् । अदृष्टस्य कार्यमात्रहेतुत्वेऽपि साक्षात्प्रवर्तकत्वं साध्यम्, अदृष्टस्य च दृष्टद्वारकत्वनियमात् । तत्र विधिकोटिं समर्थयन्ते **विध्यादेरेवेति**[१६२] । यागादावित्यर्थः । विधेस्तथात्वसिद्धौ कर्मणोऽपि तथेत्याहुः **आवेरिति**[१६२] । **तौ**[१६२] विधिधर्मौ । व्यतिरेकव्यभिचारं वारयन्ति **अपीति**[१६२] । स्वस्वव्याप्यसकलकारणमध्ये ईश्वरेच्छायास्तत्तन्मात्रवृत्तित्ववैशिष्ट्यावच्छेदेन व्याप्यत्वात्तत्सत्त्वे तद्व्यतिरेकोऽसिद्ध इत्यर्थः । अपिनाऽजानन्तोऽपि संगृहीताः । तेनान्वयव्यभिचारोऽपि, तादृशाना प्रवृत्तिनिवृत्त्योर्दर्शनात्, यागादेरपि दीक्षितान्तरदृष्टान्तेनैव करणात्, अनुष्ठानसमये वैद्यप्रयोगस्येव लौकिकव्यापारतुल्यत्वादिति भावः । **चिन्त्यमेति** । स्वसिद्धान्ताभिप्रायेण । अन्यैः पुनरिच्छायास्तत्तदविशेषितेन रूपेण कारणत्वस्वीकारात् । तथा च स्वसिद्धान्ते यथापदपदार्थविशेषिताभिधारूपेच्छाया शाब्दबोधजनकत्वं सर्वसिद्धम्, अन्यथा पदार्थप्रवेशेन शाब्दबोधेच्छामात्रं शक्तिः स्यात्, तद्वल्लक्षणाजन्यबोधसाधारणमपि भवतु, तर्हि प्रकृतेऽपीच्छामात्रादुक्तरीत्याऽऽकस्मिकत्वादावतिप्रसङ्गः । तथा च कार्यसामान्येऽप्यवश्यं विषयतासम्बन्धेनेच्छा वाच्या । सा च विनिगमकाभावात्कार्यकारणादिसकलविषयेषु वाच्या । तथा पश्चम्यर्थविषयिण्यपि । तथा पुरुषान्तरेच्छाविषयिण्यपि । स्यादेतत्, संयोगाद्यवच्छिन्नोत्पत्तिसम्बन्धेन घटत्वाद्यवच्छिन्नं प्रति शुद्धविषयतयेच्छात्वेन कारणत्वमित्यत्र न कारणान्तराणामवच्छेदकतया प्रवेश इति तेषां स्वतन्त्रकारणत्वमेवेति चेत्, नैवम्; विषयतयेच्छायास्तन्त्वादावपि सत्त्वेन तत्रापि घटोत्पत्त्यापत्तेः, विषयतायाः केवलान्वयित्वेन तन्मात्रवृत्तिविषयतयेच्छायाः कारणत्वस्य वक्तुमशक्यत्वात् । न च कारणान्तराभावान्न तथेति वाच्यम् । तर्हि सामग्रीव्याप्तौ विषयतयेच्छारूपकारणाधिकरणे कारणान्तराधिकरणत्वं सम्भवत्सम्बन्धभेदैर्निवेशनीयम् । वस्तुतस्त्वीश्वरेच्छाया अन्वयव्यतिरेकसिद्धं न कारणत्वं, किन्तु शब्दादित इति सामग्रीव्याप्तावीश्वरेच्छा न निवेश्यते, नाप्यन्वयसहचारशरीरे । तथा च केवलेच्छायाः कारणत्वे तन्त्वादौ कथं व्यभिचारो वारणीयः । यत्तु इच्छायाः कारणत्वे कारणान्तराणां सहकारित्वम्, अत एवोक्तम् 'अधिष्ठानं तथे'त्यादीति । तदिदं कारणानामवच्छेदकत्वेऽपि युज्यते । अन्यच्च समानान्वयव्यतिरेकयोरेव परस्परं सहकारिता, तस्या व्यतिरेकघटितत्वात् । न चेच्छायास्तथात्वमित्युक्तं पुरस्तात् । न चेश्वरेच्छाऽभावस्य वक्तुमशक्यत्वात्स्वाभावप्रयुक्तकार्याभावकत्वरूपं सहकारित्वं नेश्वरेच्छाया उररीकुर्मः, स्वीकुर्मस्तु कारणान्तराणामेव तथात्वमिति वाच्यम् । तथापीश्वरेच्छायाः कार्यत्वावच्छिन्नं प्रति हेतुत्वे तदवच्छिन्नं प्रति विशेषकारणानामकारणत्वादिच्छातिप्रसङ्गस्य तन्त्वादौ दुर्वारत्वात्कार्यत्वावच्छिन्नयत्किञ्चिदुत्पत्तौ व्यक्तिस्थानीयतयोपपत्तेः । न च नैष दोषः, विशेषाणां विशेषाधीनत्वादिति वाच्यम् । तर्हि कार्यत्वावच्छिन्नकार्यसामान्यापत्तेः । तद्व्याप्यधर्मावच्छिन्नं प्रति कारणान्तराणां सहकारित्वान्नेति तु न वाच्यम् । सामान्यापत्तेरनुद्धारात् । यावद्विशेषविनिर्मुक्तं सामान्यं नास्तीति चेत्, स्वयमेव तावत्कार्यत्वमवच्छेदकं वदन्विभावय । यदि च कार्यत्वस्याननुगमाद्विशिष्यैवेच्छायाः कारणत्वे सहकारिणां प्राप्तत्वान्नोक्तातिप्रसङ्ग इति विभाव्यते, तथापि तत्तन्मात्रवृत्तिविषयतया तत्त-

दवच्छिन्नं प्रति तदिच्छायाः कारणत्वे तत्तद्वस्तुदेशतत्तत्कालीनाया उपयोगोऽस्तु । यत्र तन्त्वादौ तेन सम्बन्धेनेच्छा तत्तत्कालीना, तत्र पटोत्पत्तिरित्येव प्रमाणप्रतिपत्ते । तथा च सिद्धं न समीहितम् । अथोर्ध्वं प्रस्तुतविचाराद्यदि तत्तत्कारणानामुपादानं तर्कगोचरीकुर्या , कुर्यां तर्हि तदिच्छायामेव भवदभिमतकारणाना प्रवेशम् । स्वरूपसदिच्छाया उपादानप्रयोजकत्वादीश्वराज्ञानेऽपि न दोष । तत एव तत्तदुपादानोपपत्ते तादृशविषयताया एवेच्छासंसर्गत्वादाकस्मिकत्वापत्तिरपि प्रत्युक्ता । न च वाच्यम् इच्छाया. पञ्चम्यर्थहेतुत्वविषयकत्वानुपपत्तिः, अवच्छेदकास्तस्या ससर्गतया, नियामकतयैव तेषामन्यथासिद्धेरिति दण्डादिपदार्थस्य सन्मात्रत्वेन 'सन्मूला' इत्याद्युक्तावधित्वमात्रस्य पञ्चम्यर्थत्वात्, सतो विषयतया तत्र तत्र प्रविष्टत्वात् । सतश्च कारणत्वं ज्ञानत्वेनेच्छात्वकृतित्वाभ्यां च । तत्तत्सिद्धासिद्धगोचरविषयताप्रभेदाना ज्ञानत्वेच्छात्वादीनामेकत्रैव धर्मिणि स्वीकारादित्येककारणपरिशेषापत्तिर्ब्रह्मवादिनामलङ्कार एव । व्यञ्जकतासम्बन्धेन हेतुत्वावधित्वादेर्दण्डादिनिष्ठत्वात्प्रयोजकत्वादेरन्यथासिद्धसाधारणस्वरूपसम्बन्धरूपस्य पञ्चम्यर्थत्वान्न दोष. । एतेन दण्डादिकमिव रासभमप्यवधीकुर्यादिति न्यायाचार्योक्तमपि समाहितम् । एवं पाकसाध्यभोजनसाध्यतृप्त्यर्थिन पाके प्रवृत्तिदर्शनात् प्रयोजकसाधारणेष्टसाधनताज्ञानस्य प्रवर्तकत्व बोध्यम् । एतेनेच्छाया लोकन्यायेन कारणत्वं क्लृप्तमेव, नत्वीश्वरेच्छात्वेनेति सामग्र्यां कारणान्तरेण सहेच्छाया अपि निवेश. संभाव्यते, तथापि नित्येच्छाव्यतिरेकासम्भवान्न तस्या निवेश । विचित्रेच्छाया कारणत्वे तु विशिष्टविषयतया तदभावस्य सुवचत्वाद्भवति व्यवस्थितिरिति । एकत्र द्वयन्यायेन चेच्छाया विशेषणाना प्रवेश । सत्तादात्म्यं चावच्छेदकतावच्छेदकानामप्यनुगमकम् । कारणताच्छेदकं च तत्र तत्र सत्तादात्म्यमेवेत्यवच्छेदकताया व्यासज्यवृत्तित्वानङ्गीकारेऽपि न क्षतिरिति । अधिकमस्मत्कृतपत्रावलम्बनव्याख्यायामनुसन्धेयम् ।

**श्रीभक्तिहेतुव्याख्यायां संक्षिप्तं विशदीकृतम् । मार्गाङ्गीकारकर्तॄणां मयेदं तद्विभाव्यताम् ।**

एव स्थिते तान् प्रति पूर्वपक्षिमुखेनाहु **कृतं ताभ्यामिति**[१६३] । व्यापारतया तत्सिद्धिस्तु विचारयिष्यते । ननु विचित्रेच्छया तावपि कोडीकरणीयौ विधिधर्माविति चेत्, न, कार्यकल्प्यत्वात्तस्या॰, कार्याणा च लौकिकसामग्रीत एवोपपत्ते । मङ्गलं समाप्ति प्रति, तदिच्छाया विद्यादिविषयकत्वे प्रमाणाभावादित्यर्थ । नन्वेवमप्यन्धपरम्परा स्यात्तत्राहु॰ **एवं चेति**[१६३] । परम्परायामेकस्य चक्षुष्मत्त्वे प्रथमस्य वा चक्षुष्मत्त्वे सर्वेषामान्ध्यनिराकरणम्, तेनैकेनैव सर्वोद्धारसभवादिति भावेनाहु **ईश्वरेति**[१६३] । स हि 'सर्वतोऽक्षिशिरोमुख' इति हृदयम् । असाधारणेश्वरेच्छाप्रयुक्तविधिज्ञाने व्यतिरेकव्यभिचारं दर्शयन्ति **दृश्यत** इति[१६३] । **बालस्येति**[१६३] । क्रीडया भगवत्सेवा कुर्वत इत्यनुशय । यद्यपि दीक्षित दृष्ट्वा बालकस्य क्रीडया यागादौ प्रवृत्तिरनधिकारित्वे व्यर्था, तथापि धर्मप्रवृत्तिसामान्ये विधिज्ञानत्वेन कारणत्वे व्यभिचारस्तदवस्थ एव, तस्मात्तत्रेश्वरेच्छायाः कारणत्वमङ्गीकृत्य तत्सत्त्वे तद्व्यतिरेकासम्भवाद्व्यतिरेकव्यभिचार परिहरणीय , एवमन्वयव्यभिचारोऽपि । उक्तविशिष्टसंसर्गेण व्याप्यसकलान्तर्निविष्टेश्वरेच्छासत्त्वे कार्यसत्त्वस्यावश्यकत्वात्, तथापि नेयं वादवसन्तक्रोडायुद्धनदी समुत्तर्तुं शक्येत्याहु **एवमपि सति न निस्तार इति**[१६३] । श्रुतौ तावदिच्छाया कारणत्वमुक्तं, न तु देशकालादिवैशिष्ट्येन, बहुभवन तु सार्वज्ञ्यविषयतया बहुसम्बन्ध एवेति तार्किकतनयै॰ प्रत्युपस्थिते देवास्तत्रिमवतारयन्ति । सार्वज्ञ्यविषयतया परम्परया सर्वत्र स्वसम्बन्धमपेक्ष्य स्वात्मकचिद्विषयतया साक्षात्सम्बन्धे चिद्विषयताया प्रकारताद्यन्यतमत्वात्कारणादिविषयतायास्तत्त्वे निवेशावश्यकत्वाच्छब्दशक्तिसमशीलत्वाश्रति गोमयगिरिराज परित. कुङ्कुमरसमयनदीं प्रवर्तयन्ति भावेनापि **तथाहीति**[१६३] । **स्वैरं** इति[१६३] । अयमत्र शास्त्रार्थ —विधिनिषेधद्वारा जीवस्य स्वतन्त्रकर्तृत्वेऽपि न विहितनिषिद्धाचरणानाचरणाभ्या कृतहानादिदोष. । करणे सुखमन्यथा दु.खमिति स्वाशेऽप्रसक्तस्याकृतस्य दु खदुरितादेरभ्यागम , कृतस्य सहजसुखस्य त्याग इति । तथा चात्र विधिनिषेधावेव नियामकौ जीवस्य भवेता तर्हि नित्यसुखस्वरूपस्वस्वरूपानुभव एव जीवस्य तथा प्रवृत्तौ हेतुर्वाच्य , आपाततस्तदधिकारकत्वाच्छास्त्रस्य । विशेषतस्तु विज्ञानिनामपि नियतविशिष्टाभिव्यक्ति , प्रयोज्यव्यापारस्य स्वाभाविकोऽधिकार इति राद्धान्तः । प्रकृते चास्य स्वरूपानभिज्ञस्य न कोऽपि दोषः । अन्तर्यामिणस्तु तत्कारणे दोष. स्यादेव । कृतौ प्रविष्टत्वाज्जीवोऽपि दोषभागिति तदस्यं शङ्क-

मान प्रत्युत्तरयन्ति **अकृतप्राय**[१६३]मिति । साक्षात्परम्परया सर्वाविष्टमत्स्वरूपस्यैव सर्वकारणत्वेन द्विकर्तृकप्रपञ्चे मानाभाव इति भाव । प्रभूणां श्रमापनोदायोपसहारव्याजेनावहारं कुर्वता पूर्वोक्तं 'परात्तु तच्छ्रुते'रित्यन्यतमविवादायनमधिकरणान्तरमास्कन्दितं परेणेति केनाप्यनुगृहीतेन विज्ञापिते सर्वानुग्रहार्थं स्वयमुद्यम्य विवादायनमधिकरणान्तरं रमणरेणुकाभिरसिधाराव्यूहेनोपोद्बलयन्ति **कृतप्रयत्नापेक्षस्त्वि**[१६३]त्यादि । अत्रासिधाराव्यूहे निवेशिता· केचित्स्वपक्षीया· पौत्रप्रभृतयस्त एव प्रतिवादिन पर्यनुयुञ्जते । तद्यथा खड्गकर्तुर्न वधकर्तृत्वम्, मूल्यग्रहणं विना वधोद्देश्यकतत्करण एव हिंसकत्वात् । मूल्यग्रहणात्तु तस्यैवोद्देश्यत्वम् । तथा चेयं वक्ष्यमाणमर्यादायां कारणधारा खड्गधाराप्राया । यत्र प्रवर्तमानो यदि यत्किञ्चित् कुर्यात्तदान्तर्यामिणोऽपि न हिंसकत्वम्, अन्तर्यामिणोऽपि मर्यादायां क्रोडीकृतत्वेन सेतुरूपस्वपुत्रेणान्यथासिद्धत्वाद्, विषयितयाऽन्तर्यामिणोपि कारणतावच्छेदकत्वाच्च । न चैवं मर्यादाकर्तुर्हिंसकत्वम्, मर्यादाया रिरंसाहेतुकत्वेन स्वतो हिंसकत्वाप्रयोजकत्वात् । न च रिरंसाया, अनुद्देश्यत्वात् । तदेतदुक्तम्–**अन्यत्सर्वमुपसर्जनीभूत**[१६४]मिति । येषामपि प्रकारान्तरं तेषा सर्वमेधीयहिंसावन्न दोषो लयाधिष्ठातृणाम् । प्रकृते च यथा व्रीहीणामवघातपूर्वकवैतुष्यद्वारा पुरोडाशसम्पादकतया यागजन्यसुखोपपादकव्यापारविषयत्वं, तथेह प्राकृतभावापन्नपदार्थानां प्रकृत्यवस्थाऽऽपादनेनारम्भकस्वभावानामप्यवयविना पाकस्थघटानामिव च लीलोपयोगार्थमारम्भकभावयोग्यतां शुद्धैरवयवै· सम्पादयितुं केषाञ्चिद्विशसनं भारते । केषाञ्चित्कालादिद्वारेदानीन्तनानाम् । निरसनीयभावनिरासद्वारा स्वरूपप्रत्यापत्तौ हि भगवत समारम्भ इत्युक्तं भवति । नन्वेवंविधाशुद्धप्रपञ्चप्रपञ्चनमेव किमर्थम्, नित्यलीलोपयोगिप्रपञ्च एव प्रस्तूयतां सर्वदैवारभ्यता चेति चेत्, सत्यम्, नित्यारब्ध एव स, नारब्धमपेक्षते, तत्प्राकट्यस्थानत्वेनायमपि प्रपञ्च प्रस्तूयते, तथाप्ययं किमर्थं इति पुनर्न पर्यनुयोक्तव्यम्, यतो भगवतो लीलात्मकतिरोभावरूपस्वापदशाया प्रकृत्या पाञ्चालिकान्यायेनावैदिकी सृष्टिः स्वाक्रान्तप्राकृतपुरुषचैतन्यसमुदायै सहारभ्यते । सोऽयं भारात्मक· प्रपञ्चसम्भार·, तमन्यथयितुं भगवतो लीला । तत्करणे भगवतो न वैषम्यादि । तदेवोक्तम्–**कदाचिन्मायये**ति । सा हि जडसमुदायाभिमानिचेतनदेवतैव, स्वरूपानन्दाभिव्यक्तौ तिरोभावात्मिकेयं स्वरूपे प्रविशतीति विवेक· । **विचित्रैरसानुभवार्थ**[१६४]मिति । शृङ्गारप्राधान्येन नवरसानुभवार्थमित्यर्थ· । तत्र शृङ्गारानुभवार्थं यमुनादिप्रतिफलितचन्द्रज्योत्स्नासेतु सङ्गमाद्यर्थं । मर्यादासेतुस्तु वानरानीतपर्वतै· रावणस्य नवमरसानुभवाय । वेदात्मकस्तु सेतुः संसारपारगमनाय । त्रैगुण्यविषयाणामपि तेषा भगवत्तादात्म्यपुर स्फूर्तिके तद्वाक्यार्थावधारणे साम्प्रतमेव मोक्षानुभवात् । यद्यपि नित्यो मोक्ष, संसारोऽसन्नेवेति परेषा मतं, तथापि संसारदशायामेवाविद्यानिवृत्त्यनिवृत्त्योरनपेक्ष एव वाक्यार्थानुभवः परं ब्रह्माविर्भावयति । विद्यमानाविद्योऽपि ब्रह्माश्चर्यवल्लभते, निवृत्ताविद्योऽपि न लभते इत्याश्चर्यश्रुतेराशयपर्यालोचनया स्वीयविषयताया स्वरूपसम्बन्धत्वकल्पनं यथा फलानुरोधेन ब्रह्मणोऽनुमहत्पदार्थसखोऽय ब्रह्मसम्बन्ध इत्युक्तं भवति । अविद्या तु तिरोभावात्मकविषयतैव, न भावान्तरं, नाप्यभाव इति तत्र तत्र सुव्यक्तम् । **स्वकृते**[१६४]त्यादिवाक्यद्वयम् । तत्र वेदस्य वक्ता । पर्वतै· कर्ता । आदिपदात् 'सेतुर्विधरण' इत्यादि । **एवमवसीयत**[१६४] इति । तथा च पारनिनीषया तथा तथा करणे न कोऽपि दोष इत्यर्थ । पारे कोऽस्ति यदर्थोऽयमुपक्रम इति चेत्, स एव यस्तमस· परस्तात् । तमसोऽपि तात्त्विकं रूपम् । इतरथा तमसि तदभावे विभुत्वाभावप्रसङ्गात् । तथाऽसत्पथे निनीषा कथम्, सर्वे सन्मार्गवर्तिनो भवन्त्विवतीच्छाया एव मुख्यत्वादिति चेत्, सत्यम्, मार्कण्डेयादीनामिवानभिव्यक्तानन्दात्मकनिजरूपवत्तया मायास्वरूपपरिज्ञानार्थमिति । नन्वन्तर्यामिण एव तथा प्रवर्तकत्वमस्तु, कृतं सेतुसंरक्षणेन परीप्सयेति चेत्तत्राहुः **रोपनाय चे**[१६५]ति । अन्तर्यामिणः प्रवृत्तिमात्रनियामकत्वेनाधिकृतत्वात् । अन्यथा पशुपक्ष्यादीनामप्यन्तर्यामिसत्त्वाज्जगत्युद्धारप्रसङ्गः । तस्मात्तरणीस्थानीयो वेदोऽयं यमन्तर्याम्यप्युपादत्ते तेन हि संस्कृतो हि स प्रायः शुभ एव कर्मणि प्रवर्तयतीति सेतुमारुह्य देहरथारूढस्यान्तर्यामिणो जीवः सखा, इन्द्रियाण्यश्वाः, देवताः पार्ष्णिग्राहिणः, प्राणः सारथिः, मन· प्रग्रह·, गन्तव्या पुनः परमव्योमाख्यदहरकन्दरेति । ननु स्वतन्त्रस्य केयमधीनता । राजादिभिरपि कदाचित्स्वसेतुरुल्लङ्घ्यत एवेति कश्चिदाशङ्कते **कुर्वते** **यत**[१६५]दिति । प्राकृतो हि स्वाज्ञोल्लङ्घने स्वस्य जघन्यतां प्रकटयति, भगवांस्तु निर्दोषपूर्णगुणविग्रहः कथमेवं संभाव्यत इति समादधते **यतो**[१६५] इति ।

'रामो द्विर्नाभिभाषत' इति सर्वो वेदेच्छेत्यादिषड्गुणसम्पन्नस्तैर्व्यवस्थित एव, नाव्यवस्थित इति तस्मादित्यर्थः । यत्र तु लीलाया लोकदृष्ट्या वेदादिरूप सेतुमुल्लङ्घते, सा लीला न पुरुषार्थपर्यवसायिनी, किन्तु परमपुरुषार्थ-पर्यवसायिनी, सखण्डत्वसमानाधिकरणाखण्डविषयताकानन्दानुभवकत्वादिति हृदयम् । श्रीमदाचार्या एव वक्ष्य-न्तीत्याहु [१६५]**आचार्यास्त्विति** । पुत्रं बालं वा । यस्य कस्यचिदित्यात्मस्वाभाव्यानुसारेण प्रतीतिशेष । [१६५]**वर्तमानं** यत्किञ्चित्कार्योन्मुखम् । **पदार्थगुणदोषा**विति । मधुर कूष्माण्डरस·, कटु कारवेल्लकमित्यादि भगवद्भोगानु-नयेऽपि प्रकरणाद्बोध्यम् । लोकवेदयोस्तु गजयुद्धादिभि सभाव्यमानैर्दुर्गमोऽयं पुरुषोत्तमक्षेत्रमार्ग । कदलीव-नावलम्बी सुगमस्तु मालतीमिलन्मकरन्दोऽन्यो मार्ग इति धूमादिमार्गोऽर्चिरादिमार्गश्चेतीति बोध्यम् । [१६५]**वर्तमाग्रय-त्वाभिनिवेश**मिति । नैतावता प्रवर्तकदोष , यथैव स बालकादि प्रवर्तते, तात्कालिकस्वेष्टदृष्ट्या तथैवायमनु-वर्तते । निवारितोऽपि प्रवर्तेत, स्वप्रयुक्तोऽपि वा यदि निवर्तेत, यथा धृतराष्ट्रपुत्रादयस्तदा दैवमेव प्रबलमिति मत्वा प्रेक्षापूर्वकारिण औदासीन्यमेवोचितम् । तथा भगवतो निवारणसमर्थस्यापि जीवानामिष्टानिष्टपरिज्ञानार्थं तात्कालिकप्रवृत्तिनिवृत्त्योरौदासीन्यमन्तर्यामितया तदनुवर्तित्वं चोचितमेवेति प्रघट्टकेनाहु [१६५]**फलदानार्थ**मिति । तथा चेष्टमेव ज्ञापनीय प्रापणीयं चेति नित्यानुवादवद्विधावेव तात्पर्य, न निषेधे इति भाव । [१६५]**कर्मकारणे** । यथा प्रवर्तमानं प्रति तथैव कारणे । तेन सर्वस्य सन्मार्गवर्तित्वमपि कृतप्रयत्नापेक्ष्यमित्युक्त भवति । सूत्रस्य विश्वतोमुखत्वं सूचयितुमवसाने श्रुतमादिभ्य इति सूत्राशमनुकृष्य कृतप्रयत्नाद्यपेक्ष इति सम्बन्धमात्रार्थषष्ठ्यर्था-तिशयेन चतुर्धा व्याचक्षते । एवमग्रेऽपि कर्मादिवैयर्थ्यादिभ्य इति व्याख्येयम् । कर्मण एव फलार्थं नोदितस्या-पेक्षा प्राथमिकी । सेतुपरीप्सयेति सर्वत्र बोध्यम् । 'आख्यातानामर्थं ब्रुवता शक्ति सहकारिणी'ति मीमासक-न्यायेनाहु [१६५]**प्रयत्नापेक्ष** इति । अप्रवर्तन प्रति न कोऽपि प्रवर्तयतीति लोकन्यायाच्चेत्यर्थ· । कथ तर्हि पार्थस्य युद्धे प्रायोपविष्टस्य प्रथम युद्धे प्रवर्तनमिति चेत्, सकामविषये एषा व्यवस्थेति समादधते [१६६]**कामापेक्ष** इति । एतेन निरर्थकप्रयत्नोऽपि वारितः । कामश्च प्रामाणिको, न तु भ्रान्तिप्रतिपन्नो ग्राह्यः । सत एव लौकि-कस्वर्गकामस्य तन्मात्रे स्वर्गपदार्थत्वभ्रान्तिं सूचयन्त इत्याहु [१६६]**लोकप्रवाहापेक्ष** इति । 'गतागतं कामकामा लभन्त' इति न्यायाद्, ये परिच्छिन्नसुखाकाङ्क्षिणस्ते तथैव प्रवर्तमाना प्रवर्तन्त इति लौकिककामनावत्त्वकृत-प्रयत्नत्वकर्मैतत्रितयान्तरितप्रामाण्यमत्र भगवत इति स्वमात्रप्रामाण्ये तस्य न दोषगन्ध· । तत्प्रामाण्ये हि सर्वे सन्मार्गवर्तिनो भवन्त्विति मूलेच्छैव नियामिका । सा तु मानससृष्टिषु सनकादिष्वेव वरीवर्ति, प्रावाहिकसृष्टौ तूपहितेच्छैवेति तत्कृतदोषशङ्कायामाहु [१६५]**न चैवमनीश्वरत्वमि**ति । एवं न चेत्यर्थं । स्वकृतसेत्वनुरोधा-दित्याहु [१६५]**मर्यादे**ति । अन्यथा स्वसामर्थ्येनैवोत्तारकस्य सेतुपर्वतानामप्यनुपयोगप्रसङ्गादित्यर्थ । स्वसेव्यस्व-रूपाभिप्रायेणाहु· [१६५]**तत्र पुष्टी**ति । [१६५]**अङ्गीकार** इति । सत्यपि मर्यादांशे यथा पार्थाना ततोऽन्यत्र । ततोऽप्य-ङ्गीकार इत्याहुः [१६५]**इत्याहु**रिति । [१६५]**अयमपि पक्ष** इति । अपिना स्वस्य स्वातन्त्र्यं सूचयन्ति । स्वयं तु क्रीडे-च्छाप्राधान्यमेवोक्तवन्त । यथा काम एव मुख्योऽन्यत्सर्वमुपसर्जनीभूतमिति श्रीमदाचार्यैरुक्तम्, तथाऽस्माभिः क्रीडैव मुख्यतयोक्ता, सेतुपरीप्साप्युपसर्जनमेवेति । तैस्तु मर्यादामात्रं प्रकृताधिकरणार्थत्वेन निरूपितम् । मर्या-दाया अपि कारणीभूता पुष्टिर्नोक्ता । सा हि स्थायिभावस्वरूपेति श्रीमदाचार्या एवात्र प्रमाणमित्याहु [१६५]**नाति-रिच्यत** इति । मर्यादोक्त्यैव पुष्टेर्निरूपितत्वात् । तदुक्तम्, 'निष्कलङ्ककलानाथीभव'दिति । मार्यादिकभगवद्वा-क्यान्यपि यासां वाक्यैः सङ्गतानि पुष्टिमुद्वेलयन्तीति सोल्लासमुक्तम् । पूर्वपक्षिणमुत्तरयन्ति [१६५]**तस्मादि**ति । त्वया 'परात्तु तच्छ्रुते'रित्यधिकरणविदूषकेन मर्यादामुल्लङ्घता प्रोक्त· खेचराणामिव शून्यो मार्गो नेत्यर्थ । प्रस्तु-तविचारं खिलेन पूरयितुमाहु· [१६५]**किञ्चे**ति । **नाधर्मधर्मा**विति । अत्र केचित्, पूर्वं कृतौ यौ धर्माधर्मौ तदपेक्ष-इत्यर्थः । अन्यथा विहितप्रतिषिद्धवैयर्थ्यं नोट्टङ्कित स्यात् । तथा च कर्मवादप्रधानमिदं सूत्रमित्याहु , तन्मतनि-राकरणायाहु [१६५]**तद्व्याचख्या**विति । प्रयत्नशब्दस्य पुरुषभावनावाचिनोऽदृष्टवाचकत्वाभावाद्यथाश्रुतविरोध इत्यर्थ· । अधर्मोऽनात्मधर्म इति तत्त्यागं सूचयितुमधर्मस्य प्राड् निर्देश । यथा चैतत्तथा वक्ष्यते । अत्र शङ्क्यते—ननु यथाश्रुतविरोधमात्रेण कथं कर्मवादपरताया सूत्रस्य द्वेष उद्भाव्यते । मैवम्, परस्यैव कारणत्वोपपादनार्थं 'परा'दित्यधिकरणप्रवृत्तेस्तदुपपादकस्य 'कृते'त्यादिसूत्रस्य यदि कर्मवाद एवाग्रहस्तदा प्रतिवादिना वञ्चितोऽयं

सूत्रवाधी । तथापि कर्मापेक्षा स्वाचार्यैर्दर्शितेति चेत्, सत्यम्, तथापि विशिष्टेच्छाया अपि निवृत्तिदर्शिनां सुव्यक्तत्वात्तत्रैव कर्मणां विषयितावच्छेदकत्वात्तदभिप्रायानुसारिभिरस्माभी रमणेच्छैव तत्त्वेन निरूपिता । आस्तां चैतत्, तथापि प्रयत्नपदार्थो धर्माधर्माविति न स्वाचार्याणामाशयः । प्रयत्नापेक्षायाः स्वातन्त्र्येण निरूपितव्याख्यानात् । सेतुत्वेन कर्मापेक्षायां तु सेतोः स्वकर्तृकत्वेन स्वसामर्थ्याक्रान्तत्वेनोपजीव्यविरोधाच्च कर्मवादस्वातन्त्र्यम् । तदुक्तं हनुमता 'श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते' इति । अत्रैव पावनिः सर्वबालकानां भगवत्पूर्वप्रसादेन संसृष्टिसमये प्रसादप्राप्त्यर्थं श्रीपरिगृहध्वजाग्रादुत्पत्य कर्मवादिनं हस्तेन परामृशति मध्वाचार्यपक्षपाती किञ्चेति[१५६] । विधिनिषेधौ किल तव कर्मवादिनः कर्मणा तावदस्मदीयैर्माध्वैहिंसाभयादृणीकुर्वद्भिरीश्वरशब्दमात्रत्वेन स्वीकृतौ । विहितप्रतिषिद्धयो स्वरूप तु तत्प्रामाण्येन निर्णेयम् । तत्र विधिविचारे यदि जीवस्य स्वतन्त्रकर्तृत्वं, तदा हिंसादिकर्तृत्वापत्तिः । न च वाच्यं शब्दाद्वारकव्यापारविशेषस्यैव हिंसात्वम् । तेनाप्यधर्मरूपादृष्टोत्पादनात् । न च विधिबलात्तेन धर्म एव जन्यत इति वाच्यम् । विहितहिंसात्वेन धर्मकारणत्वेऽपि सामान्यतो हिंसात्वादिनाऽधर्मजनकत्वस्यापि सुवचत्वात् । विहितान्यहिंसात्वेनाधर्मजनकत्वोक्तौ गौरवात् । एतेन बलवदनिष्टाननुबन्धित्वबोधनान्न दोष इति निरस्तम् । तस्यैव सन्दिग्धत्वात् । बाधसंशयो न विरोधीति चेत्, न; हिंसात्वेन तन्निश्चयस्यापि सुवचत्वात् । तर्हि विधिवैयर्थ्यमिति चेत्, तर्हि हिंसायां, द्वेषवता न कर्तव्यमन्येन कर्तव्यमिति षोडशिग्रहणाग्रहणयोरिव विकल्पसम्भवात् । अन्यथा क्वचिदपि विकल्पानुपपत्तेहिंसात्वनिरुक्त्यैवानन्यगतिकत्वात् । अथेश्वरायत्तं जीवकर्तृत्वं, तर्हीश्वर एव निर्दोषतया समाधीयताम् । कर्मवादे तु न काप्युपपत्तिरित्युक्त्या तूष्णींभूते कपिवरे तद्दृष्टनिजाचार्यान् स्मृत्वा स्वयमाहुः दिगिति[१६५] । ध्वजाग्रकेसरिणैव त्वया तत्रस्थकेसरिभि सुप्रसादे क्रीडितव्यम्, यावता त्वयैवास्कन्दितमेनं वादिनं वयमासादयामः । तथाहि यदि प्रयत्नशब्दार्थो धर्माधर्मौ, तदा तयो प्रयत्नशब्देनैवोक्तत्वात्तदुपपादकशब्दरूपयोर्विधिनिषेधयोरेव वैयर्थ्यमुद्भावयितु योग्यम्, न तु तद्विषयकप्रयत्नवैयर्थ्यात्प्रयत्नापेक्ष इत्यर्थो वक्तुम्, धर्माधर्मयोर्वैयर्थ्येऽपि भगवतो राज्ञ आज्ञाया पर्यनुयोगानर्हत्वात् । सेतुपरीप्सायां तु भवति धर्माधर्मव्यपेक्षेति, 'लोकवत्तु लीले'ति न्यायाविति समाप्तोऽयं वादः । अत्र मध्यस्थैः श्रीगोकुलेशैराशङ्क्यते, कथं समाप्तो वादः, यावता प्रवर्तकत्वं कृष्णस्य निरङ्कुशं निर्व्यूढं भवति । 'कृते' ति सूत्रन्यायेन सेतुपरीप्साया भगवतः प्रवर्तकत्वस्य केनापि प्रकारेण सापेक्षत्वात्, विध्यर्थस्योपयोगे तद्द्वारा प्रवर्तकत्वे तस्यापि प्रवर्तकत्वात्तन्निषेधानुपपत्तेः, सापेक्षत्वसूत्रानुपपत्तेश्चेति हि विवदन्ते वादिनः । सत्यं प्राची दिगेव चन्द्रोदयवती दिगिति प्रागेव निर्दिष्टाऽस्माभिरिति जानन्तु । अयं हि चन्द्रोदयः स्वतन्त्रः, न विधिगोचर । तस्याऽनित्यत्वात् । नित्याविर्भावशालिनस्तु कथं कर्मजन्यता स्यात् । किञ्च कार्यस्य सर्वस्य कार्यत्व एव किं नियामकम्?, येन कारणकल्पना । कारणजन्यत्वं चेत्, कारणानिर्णये तस्यैव ग्रहीतुमशक्यत्वात् । यथासम्भवमन्वयव्यतिरेकौ शब्दानुमाने च माने स्यातामिति चेत्, अन्वयव्यतिरेकित्वं कार्यत्वकारणत्वयोरुभयोर्ग्राहकमिति फलितम् । तत्रातिरिक्तकारणताया मानाभावात्कारणताघटकदलद्वयग्रहे प्रत्येकमन्वयव्यतिरेकयोः प्रयोजकत्वाभावाद्विशिष्टस्य चानतिरेकादन्वयव्यतिरेकाभ्यां तयोः कारणत्वेऽनवस्थानात् । एवं कारणत्वाग्रहे शब्दानुमानगम्यमपि न कार्यत्वादिकम्, व्यावहारिककार्यकारणभावस्यान्वयव्यतिरेकग्रहाधीनत्वाद्वयुत्पत्तेरभावात् । खण्डनकारस्तु चार्वाकानुयायी, कारणत्वादिकमसदेव मन्यते, तच्च ग्रन्थस्य खिले प्रवाहवे व्यक्तीभविष्यति । वस्तुतः स्वरूपसम्बन्धरूपं कारणत्वादिक सत्त्वघटित सत एव, सच्च सर्वानुगमिति ब्रह्मवादरीतिः । तत्र च सेतुपरीप्सा स्वतो गन्तुं समर्थस्यापि लीलया, वेत्रलतावलम्बनन्यायात् । एव विध्यर्थज्ञानेऽप्यप्रवृत्ते प्राचीनकर्मसहकृतान्तर्यामिण प्रवर्तकत्वे सहकारिणैवान्तर्यामिणोऽन्यथासिद्धि ये मन्वन्ते तेषा विध्यर्थोऽप्यन्यथासिद्ध एव, प्राचीनकर्मभिरेवोपपत्ते । विध्यर्थज्ञानान्वयव्यतिरेक सहचारज्ञानमप्यन्यथासिद्धिवशाच्च कारणत्वग्राहकम् । अत एव प्राचीनकर्मणामपि विध्यर्थज्ञानमूलकत्वं तत्तत्कर्मभिरेवान्यथासिद्धम्, किन्तु विधेः साफल्याय तदर्थबोधोपयोगे वक्तव्ये विधेः पौरुषेयत्वे पुरुष एव प्रवर्तको विधिद्वारमुपजीव्य पुमानित्येकः प्रकारः । प्रवर्तकत्वमित्याद्युक्तेरपौरुषेयत्व निराकृतप्रायम् । प्राचीनकर्मणा विध्यर्थविमर्शप्रमोषयोरुपक्षीणत्वादनेकत्वाच्च न प्रवर्तकत्वम्, तत्पुनरन्तर्यामिण एव । तस्यैकत्वानेकत्वेऽपि तावत्कर्मापेक्षया लाघवात् । पार्थस्य

